निरोव उक्तो वैराग्यप्रयोगाप्तं तु शोषितम्।
त्रिवात्वाश्रयसारूप्यसंज्ञं शेषं मनुष्यजम् ॥ ३७ ॥

हेतुकर्मवलाद् धात्वोरारूप्योत्पादनं द्वयोः।
ध्यानानां रूपवातौ तु ताभ्यां धर्मतयापि च ॥ ३८ ॥

सद्धर्मो द्विविधः शास्तुरागमाधिगमात्मकः।
धातारस्तस्य वक्तारः प्रतिपत्तार एव च ॥ ३९ ॥

काश्मीरवैभाषिकनीतिसिद्धः
प्रायो मयायं कथितोऽभिधर्मः।
यद् दुर्गृहीतं तदिहास्मदागः
सद्धर्मनीतौ मुनयः प्रमाणम् ॥ ४० ॥

निमीलते शास्तरि लोकचक्षुषि
क्षयं गते साक्षिजने च भूयसा।
अदृष्टतत्त्वैर्निरवग्रहैः कृतं
कुतार्किकैः शासनमेतदाकुलम् ॥ ४१ ॥

गते हि शान्ति परमां स्वयम्भुवि
स्वयम्भुवः शासनधूर्धरेषु च।
जगत्यनाथे गणघातिभिर्मलैः
निरङ्कुशं स्वैरमिहाद्य चर्यते ॥ ४२ ॥

एवं कण्ठगतप्राणं विदित्वा शासनं मुनेः।
बलकालं मलानां च न प्रमाद्यं मुमुक्षुभिः ॥ ४३ ॥

—:०:—

# ग्रन्थ-ग्रन्थकर्ता सूची

मूले भाष्ये च व्याख्यायाम् आचार्याभ्यां स्मृता इह ।
ग्रन्था वा ग्रन्थकर्तारस्तेषां सूची प्रतायते ।।